॥ वि० ॥ चेतनावतस्त्यागोपादाने सम्भवतो यस्यादिरित्यस्य तु कथं ते स्यातामत आह । एतदिति । योग्यत्वादादिरित्यस्यैङित्येकवचनान्तेन सम्बन्ध इतिशेषः । तुल्यजातीयस्येत्युपलक्षणं त्यदादीनीत्यनेनाऽऽदिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् ॥ * ॥ एङ् प्राचाम् । कुणिनेति । विधेयसम्बन्धस्याभावात्प्राग्ग्रहणमाचार्यनिर्देशार्थमन्यथा प्राग्देश इत्येव वदेदितिभावः । लघ्वावेषम्याय च व्यवस्थितविभाषाश्रयणं तत्फलमाह । तेनेति । अन्येन त्विति ।

॥ कै० ॥ तद्यथेति । एतद्दर्शयति । स्वरितत्वप्रतिज्ञानादुत्तरसूत्र एव योग्यत्वाद्यस्याचामादिरितिसम्बध्यते एङ् यस्याचामादिस्तद्वृद्धमितिवाक्यार्थसम्पादनाय । इह त्वयोग्यत्वात् सम्बन्धानुपपत्तिः । तुल्यजातीयस्य निर्द्धारणात् त्यदादीनाञ्चाज्रूपत्वाभावाद्यस्याऽचामाद

॥ भा० ॥ वृद्धिर्यस्याचामादिस्तद्वृद्धं त्यदादीनि च वृद्धसंज्ञानि भवन्ति । वृद्धिर्यस्याचामादिस्तद्वृद्धम् । एङ् प्राचां देशे यस्याचामादिग्रहणमनुवर्त्तते वृद्धिग्रहणं निवृत्तम् । तद्यथा । कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति ॥ * ॥ एङ् प्राचां देशे । एङ् प्राचां देशे शैषिकेष्विति वक्तव्यम् ॥

॥ कै० ॥ यस्त्यदादय इति तत्सम्बन्धाभावात् ॥ * ॥ एङ् प्राचाम् । कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषात्वञ्चेतिव्याख्यातं तेन कोडो नामोदग्रामस्तत्र भवः कौड इत्यणेव भवति । अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातं तेन देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्त इत्यवृद्धत्वाट् ठञ्ञिठौ न भवतः । भाष्यकारस्तु कुणिदर्शनमशिश्रियत् ॥

॥ वि० ॥ श्रुतान्वये सम्भवत्यन्येनान्वयोऽनुचित इति तद्भावः । वाहीकश्च देशविशेषस्तत्र स ग्रामः प्राग्देशबहिर्भूतः । वाहीकदेशश्चोभयसम्बद्धः प्राग्देशबहिर्भूतो वा । अत एवाश्वयात्यविति सूत्रे शाकलनाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता । एतेनोभयबहिर्भूता वाहीका इत्यपास्तम् ॥

॥ वि० ॥ बाहीकग्रामाविति । आद्ये अस्याप्राग्देशीयाविति शेषः पूरणीय इतिबोध्यम् । अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्येत । ठञ्ञिठाविति । बाहीकग्रामेभ्यश्चेत्यव वृद्धादित्यनुवृत्तेः । प्रागुदग्विभागस्तु शरावत्यास्तु योऽवधेः देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तर इत्यमरेण दर्शितः । शरावती चोत्तरपूर्वाभिमुखीत्येके । ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी सेत्यन्ये । उभयथापि प्रागुदक्स्वरूपे न विवादः । बाहीकलक्षणञ्च पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः । वाहीका नाम ते देशा न तव दिवसं वसेदिति कर्णपर्वणि । एवञ्च धर्मबहिर्भूतत्वाद्बाहीकत्वम् । शतद्रुविपाशैरावती-

॥ कै० ॥ सेपुरं स्कौनगरञ्च बाहीकग्रामौ । तव वृद्धत्वाद्बाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः । शेषिकेष्विति वचना-दपत्यविकारयोर्वृद्धलक्षणप्रत्ययाभावः । क्रौडदेवदत्तयोस्त्वप्राग्देशवाचिनोर्व्यवस्थितविभाषया न भवतीति प्राग्देशवाचिनकृ

॥ भा० ॥ सैपुरिकी सैपुरिका । स्कौनगरिकी स्कौनगरिकेति ॥ ❀ ॥ इति श्रीमद्भगवत्पतञ्जलि-विरचिते व्याकरणमहाभाष्ये प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् पादश्चायं समाप्तः ॥ ❀ ॥

॥ कै० ॥ देवदत्तस्य वृद्धसंज्ञत्वात् काश्यादित्वात् वृद्धलक्षणौ ठञ्ञिठौ भवतः ॥ ❀ ॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निम् पादश्चायं समाप्तः ॥ ❀ ॥

॥ वि० ॥ वितस्ताचन्द्रभागेतिपञ्चनद्यः सिन्धुः षष्ठस्तन्मध्यदेशो बाहीक इति तद्व्याख्यातारः । कुणिमताश्रयणे शैषिकेष्वित्यस्य वैयर्थ्यं व्यवस्थितविभाषयैव सिद्धेः । अतोऽन्यमताश्रयेणैव भाष्यम् । भाष्यप्रामाण्याच्चैतावबाहीकग्रामावपीत्यन्ये । भाष्योक्तव्यवस्थितविभाषातिरिक्ता न व्यवस्थिता इत्यस्यार्थस्य शैषिकेष्वि-तिज्ञापकमित्यपरे । अपत्येत्यादि । उदीचां वृद्धादिति नित्यं वृद्धेतिचेति सर्वेष्टसिद्धिः ॥ ❀ ॥ इति काळोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् पादश्चायं समाप्तः ॥ ❀ ॥